# ॥ श्रीमङ्गलाम्बिकासुप्रभातम् ॥

ॐ

मेलक्कावेरि अथवा कुम्भघोण क्षेत्रे परमहंस-परिव्राजकाचार्य

श्रीश्रीश्री-पञ्चापगेश-ब्रह्मेन्द्र-सरस्वती-श्रीपादैःविरचितं

श्रीमङ्गलाम्बिकासुप्रभातम्

श्रीमेना-सुप्रजा देवि

पूर्वा सन्ध्या प्रवर्तते ।

उत्तिष्ठ शिवकान्ते त्वम्

कर्तव्यं दैवमाह्निकम् ॥ १॥

उत्तिष्ठोतिष्ठ मातङ्गि

उत्तिष्ठ वृषभध्वजे ।

उत्तिष्ठ कमलापूज्ये

त्रैलोक्यंमङ्गलं कुरु ॥ २॥

मातस्समस्तजगतां मदनान्तकारेः

अङ्गे विहारिणि मनोहर-दिव्यमूर्ते ।

श्रीस्वामिनि श्रितजन-प्रियदानशीले

श्रीकुम्भनाथदयिते तव सुप्रभातम् ॥ ३॥

तव सुप्रभातम् अरविन्दलोचने

भवतु प्रसन्नमुख-चन्द्रमण्डले ।
विधिमाधवेन्द्र-वनिताभिरर्चिते
श्रीकुम्भनाथदयिते दयानिधे ॥ ४॥

श्रीमाधवाब्जभव-षण्मुख-वासवाद्या
दुर्गाम्बिकादि-चरितं विबुधाः पठन्ति ।
भाषापतिः पठति वासरशुद्धिम् आरात्
श्रीमङ्गलाम्ब महिते तव सुप्रभातम् ॥ ५॥

तन्त्रीप्रकर्ष-मधुरस्वनया विपञ्च्या
गायत्युमे सुचरितं तव नारदोपि ।
भाषा-समग्रम् असकृत् करचार-रम्यं
श्रीमङ्गलाम्ब महिते तव सुप्रभातम् ॥ ६॥

श्रीमत्यभीष्ट-वरदे नतलोकबन्धो
श्रीमङ्गलाम्ब जगदेक-दयैकसिन्धो ।
श्रीकुम्भनाथ-भसिताङ्कित-दिव्यमूर्ते
श्रीमन्त्रपीठनिलये तव सुप्रभातम् ॥ ७॥

श्रीमत्-कवेरतनुजाप्लव-निर्मलाङ्गाः
श्रेयोर्थिनो हरि-विरिञ्चि-सनन्दनाद्याः ।
द्वारे वसन्ति शुभदर्शन-काङ्क्षया ते
श्रीमङ्गलाम्ब महिते तव सुप्रभातम् ॥ ८॥

कन्दर्प-दर्पहर-सुन्दर-दिव्यमूर्ते

श्रीकुम्भनाथ-सुमुखाम्बुज-लोलदृष्टे ।

कल्याण-निर्मल-गुणाकर-दिव्यमूर्ते

श्रीमङ्गलाम्ब महिते तव सुप्रभातम् ॥ ९॥

भास्वानुदेति विकचानि सरोरुहाणि

सम्पूरयन्ति निनदैः ककुभो विहङ्गाः ।

श्रीमङ्गलाम्ब-चरणार्चनयाऽतिहृष्टाः

तामाश्रयन्ति गिरिजे तव सुप्रभातम् ॥ १०॥

श्रीमन्त्रपीठनिलये ललिते दयार्द्रे

श्रीकुम्भघोण-नगरीकृत-सन्निधाने ।

श्रीकुम्भनाथमहिषि श्रितभक्तिपात्रे

श्रीमङ्गलाम्ब तव मङ्गल-सुप्रभातम् ॥ ११॥

कामाक्षि रक्तशतपत्र-दलायताक्षि

मीनाक्षि बालहरिणाक्षि दयापराक्षि ।

नीलोत्पलाक्षि निटिलाक्षि सुविस्तृताक्षि

श्रीमङ्गलाम्ब तव मङ्गल सुप्रभातम् ॥ १२॥

नानाप्रकार-नवरत्न-किरीट-शोभा

भास्वत्-शिरोशशिकलाञ्च समीक्ष्य मन्ये ।

नक्षत्र-मण्डलमुमे सहशीतरश्मि

पात्युत्तमाङ्गमभितस् तव सुप्रभातम् ॥ १४॥

उद्यान-पाल-कर-सञ्चित-दिव्य-गन्ध-

पुष्पाणि सन्ति पदपङ्कज-पूजनाय ।

शाक्ताश्च सह्यगिरिजात-जलावगाहाः

सिद्धाः महेशदयिते तव सुप्रभातम् ॥ १५॥

सर्वेषु जन्तुषु महाप्रलये विनष्टे-

-ष्वन्तर्हितेषु विधिविष्णुमुखामरेषु ।

कुम्भ-श्रित-त्रिजगती-करणाङ्कुरेण

शम्भुर् यद् अस्ति महिमा तव सुप्रभातम् ॥ १६॥

आच्छादितेषु सुमनोहर-गन्धपुष्पैः

अङ्गेषु सत्सु निखिलेष्वतिरोहितं ते ।

पश्यामि शिष्टमधुना करुणाकटाक्षं

श्रीमङ्गलाम्ब तव मङ्गल-सुप्रभातम् ॥ १७॥

आयान्ति भारत-तलान्ननु कोण-कोणात्

सिंहं गते सुरगुरौ प्रतिषड्द्वयाब्दम् ।

स्नातुं महामखमिति प्रतिथे सुतीर्थे

यत्र स्थिता सकल पुण्यसरित् प्रभातम् ॥ १८॥

श्रीशाङ्र्गपाणिरिहपादपुरस्तवाम्ब
कोदण्डपाणिर्-उभयोर्-अथ चक्रपाणिः ।
ते पार्श्वयोः निवसतस्तव पृष्ठभागे
श्रीस्वामिनाथगुरुराट् तव सुप्रभातम् ॥ १९॥

आकुञ्चितौ करतलावभयं वरं च
भक्ताय दातुमपि वाञ्छितमम्ब मातः ।
पाशाङ्कुशाङ्कयुतपाणियुगं विरोधि-
शिक्षार्थम् उद्धृतमिदं तव सुप्रभातम् ॥ २०॥

कल्याणि कल्पलतिके कलमन्दभाषे
कर्पूरविद्ध-कनकाभरणे कवीशे ।
कष्टे भवे परिसरन् कलये हृदि त्वां
मामुद्धराम्ब तव मङ्गल सुप्रभातम् ॥ २१॥

सृष्टिस्थितिप्रलय-साक्षिणि विश्वमातः
स्वर्गापवर्ग-फलदायिनि शम्भुकान्ते ।
श्रुत्यन्त-केलिनि विपक्ष-कठोरवज्रे
भद्रे प्रसन्नहृदये तव सुप्रभातम् ॥ २२॥

मातः स्वरूपम् अनिशं हृदि पश्यतां ते
को वा न सिध्यति मनश्चिर-काङ्क्षितार्थः ।
सिध्यन्ति हन्त धरणी-धन-धान्य-धाम-

श्री-धेनु-धैर्य-धृतयः सकलाः पुमर्थाः ॥ २३॥

## श्री मङ्गलाम्बिका प्रपत्ति

ईशानां जगतोस्य कुम्भ-सुपतेः शम्भोः परां प्रेयसीं
तद्धामस्थल-नित्यवासरसिकां तत्क्षान्ति-संवर्धिनीम् ।
कीरालङ्कृत-पाणिपल्लवयुतां सिंहासनस्थां सतीं
वात्सल्यादि-गुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १॥

सप्रेमभीति पुरभित्-करपल्लवाभ्यां
संवाहनेपि सपदि क्लमम् आददानौ ।
कान्तौ अवाङ्मनस-गोचर सौकुमार्यौ
श्रीमङ्गलाम्बचरणौ शरणं प्रपद्ये ॥ २॥

मन्मूर्ध्नि साधु-निवहे विकटाटवीषु
श्रीकुम्भघोणनगरे शिरसि श्रुतीनाम् ।
चित्तेऽप्यनन्य-मनसां समम् आहितौ ते
श्रीमङ्गलाम्ब चरणौ शरणं प्रपद्ये ॥ ३॥

रत्नानि नाम ननु भान्तु किरीटमध्ये
वक्षःस्थले च वसताद् बृहद् इन्द्रनीलम् ।
काञ्ची तवाङ्गम् अभितः सह किङ्किणीभिः
तैः किं सुवर्णचरणौ शरणं प्रपद्ये ॥ ४॥

अङ्गादपि स्तनतटादपि सस्मितास्यात्
संवर्धितार्भक-कुतूहल-हास-लौल्यात् ।
श्रेष्ठौ शिवे भवभयस्य विमोचकत्वात्
श्रेष्ठात्मवन्द्य-चरणौ शरणं प्रपद्ये ॥ ५॥

माहात्म्यम् अम्ब निखिलाङ्गम् अवेक्ष्य लोके
पादस्य ते भवति नूनमहो विचित्रम् ।
पादस्तवाल्पपरिमाणयुतोऽपि तस्य
पादत्वमेव हि मिषं, शरणं प्रपद्ये ॥ ६॥

दूरिकृतार्ति-दुरितौ क्षपिताधिपीडौ
मोक्षप्रदौ सकलमङ्गल-हेतुभूतौ ।
रम्यौ अलक्तकरसेन विनैव रक्तौ
मातस्त्वदीयचरणौ शरणं प्रपद्ये ॥ ८॥

यत्पद्मिनी तव पदे तपनप्रकाशे
सौगन्ध्य-मन्दगति-शीतलताम् अवेक्ष्य ।
निःश्वास-गर्वम् अपहाय निमीलिताक्षी
जाता तद् अम्ब चरणौ शरणं प्रपद्ये ॥ ९॥

गन्धैर्-अलर्क-विविधाभरणैश्च पुष्पैः
आच्छाद्य तोषम् उपयान्तु तनुं महान्तः ।

अस्मत्-प्रयोजनम् उमे करुणाब्धि-पद्भ्यां
तावेव मातृचरणौ शरणं प्रपद्ये ॥ १०॥

नानाविध-श्रुति-विबोधित-यज्ञकर्तृ-
गोविन्द-दीक्षित-महामति-मन्त्रि-वन्द्यौ ।
हे मङ्गलाम्ब शुभमङ्गल-दायकौ ते
साष्टाङ्गम् अद्य चरणौ शरणं प्रपद्ये ॥ ११॥

कुम्भेश्वरस्य गृहिणि श्रित-कुम्भघोणे
हारिद्र-कुङ्कुम-समर्चित-पादपद्मे ।
श्रीमन्त्रपीठनिलये सदये श्रितेषु
श्रीमङ्गलाम्ब चरणौ शरणं प्रपद्ये ॥ १२॥

ईशोऽपि विस्मित-हत-त्रिपुरासुरोऽपि
चक्रायुधोऽपि मधुकैटभनाशकोऽपि ।
शक्तौ न यस्य हनने महिषासुरस्य
नाशेन यद्भवति मङ्गलमस्तु मातः ॥ १३॥

श्रीकुम्भघोण-नगराम्बुधि-चन्द्रकान्तौ
श्रीकुम्भनाथ-हृदयाम्बुज-भानुकान्तौ ।
श्रीचक्रराज-महितौ महनीयभूषौ
श्रीमङ्गलाम्ब चरणौ शरणं प्रपद्ये ॥ १४॥

प्रादुर्भवत्-तरणिबिम्ब-शतारुणौ ते
पर्याप्त-शीतकिरणायुत-कोमलौ च ।
शृङ्गारसार-परिवाहमयौ च मातः
श्रीमङ्गलाम्ब चरणौ शरणं प्रपद्ये ॥ १५॥

श्रीमङ्गलाम्बिकामङ्गलम्

मणिद्वीप-विरक्तायै सह्यकन्या-सरित्तटे ।
शिवेन रममाणायै मङ्गलायै सुमङ्गलम् ॥ १॥

शङ्कराद्धाङ्ग-सौन्दर्य-शरीरायै सदात्मने ।
शिवाकार-महामञ्च-निलयायै सुमङ्गलम् ॥ २॥

महिषासुर-दोर्वीर्य-निग्रहायै महात्मने ।
महनीय-गुणाढ्यायै मङ्गलायै सुमङ्गलम् ॥ ३॥

चिदग्निकुण्ड-सम्भूत-सुदेहायै चिदात्मने ।
शुद्धसत्त्व-स्वरूपायै मङ्गलायै सुमङ्गलम् ॥ ४॥

सर्वाधिष्ठान-रूपायै सच्चिदानन्दमूर्तये ।
सर्ववेद-प्रकाश्यायै मङ्गलायै सुमङ्गलम् ॥ ५॥

महेश्वर-महाकल्प-महाताण्डव-साक्षिणी ।

महाकुम्भेशमहिषि मङ्गलाम्बास्तु मङ्गलम् ॥ ६॥

कामकोटि-सुपीठस्थैः कामजेतृ-स्वरूपिभिः ।

चन्द्रशेखर-योगीन्द्रैः सत्कृतायै सुमङ्गलम् ॥ ७॥

मङ्गलाशासनपरैः महामहिमशालिभिः ।

सुब्रह्मण्यादि-शाक्तैश्च सम्पूज्यायै सुमङ्गलम् ॥ ८॥